तदुपरि लक्षद्वयेऽङ्गारकः। तत उपरि लक्षद्वये बृहस्पतिः। ततो द्विलक्षे शनिः। शनेरुपरि लक्षयोजने सप्तर्षिमण्डलम्, सप्तर्षिमण्डलस्योपरिष्टाल्लक्षे ज्योतिश्चक्राधारभूतो ध्रुवः, एवं सवितृमण्डलस्योपरि ध्रुवपर्यन्तं चतुर्दशलक्षोत्सेधः स्वर्लोकः॥

सप्तर्षिमण्डलस्योर्ध्वं ध्रुवमण्डलपर्यन्तं कश्चिद्विष्णुलोकः। ध्रुवमण्डलस्योपरि महर्लोकः कोटियोजनोत्सेधः। ततो जनलोको द्विकोटियोजनोच्छ्रायः, तपोलोकोऽष्टकोटियोजनोच्छ्रायः। सत्यलोकस्तु द्वादशकोटियोजनोच्छ्रायः। एवं ध्रुवादुपरि सत्यलोकोर्ध्वसीमान्तं त्रयोविंशतिकोटियोजनानि भवन्ति। तत उपरि किञ्चिदूनकोटिद्वययोजनं तमः; ततःपरमण्डकटाह इति। एवं सूर्याण्डगोलकटाहयोर्मध्ये पञ्चविंशतिकोटियोजनत्वम् ऊर्ध्वमधश्चेत्यण्डकटाहान्तरविवरोच्छ्रायस्य पञ्चाशत्कोटियोजनत्वं सिद्धम् ॥ ६–७॥

॥ इति भूगोलनिर्णयस्सव्याख्यस्समाप्तः ॥

---

## भगवदाराधनप्रयोगकारिका ॥

स्वाचान्तस्सूर्ध्वपुण्ड्रः प्रणमनमजिनाद्यासनं सासुयामस्साङ्गन्यासो जपस्स्याद्धृदयकमलके मानसी देवपूजा।
वामस्थं वारिपात्रं कुसुममितरतश्चान्यदग्रेऽर्घ्यपाद्यस्नानीयाचामपूर्वाद्धरितनुकुसुमस्वात्मनां प्रोक्षणं स्यात् ॥ १ ॥
आह्वानं चासनार्घ्यं पदसलिलमथाचामपुंसूक्तयुक्तस्नानं वस्त्रोपवीते मलयजकुसुमे धूपदीपौ क्रमेण।
मध्वादिः पर्क आदावुपरि च सलिलं पायसाद्यन्नजातं पानीयाचामपूगं परिगतिनमनोद्वासनं देवपूजा ॥ २ ॥
कूर्मादीन् दिव्यलोकान्तदनु मणिमयं मण्टपं तत्र शेषं तस्मिन् धर्मादिपीठं तदुपरि कमलं चामरग्राहिणीश्च।
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं सेनेशान्द्वारपालान्कुमुदमुखगणान्विष्णुभक्तान्प्रपद्ये ॥ ३ ॥

॥ इति भगवदाराधनप्रयोगकारिका ॥

---

## श्रीमन्निगमान्तमहादेशिकैः समयविशेषेष्वनुगृहीताः मुक्तकश्लोकाः ॥

अहन्ते नाहं ते विहरणपदं देशिकगिरस्त्वदन्ते नः स्वान्ते सपदि गतसन्देहविषयाः।
अनायासा यासामहिपतिशया सा भगवती धराधारा धाराधरनिकरसाधारणरुचिः॥

सूते सूकरयुवतिस्सुतशतमत्यन्तदुर्भगं झटिति। करिणी चिराय सूते [कमपि] सकलमहीपाललालितं कलभम् ॥

कर्मावलम्बकाः केचित् केचित् ज्ञानावलम्बकाः। वयं तु हरिदासानां पादरक्षावलम्बकाः॥

तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्ये।
तन्त्रेषु निश्चितधियो वयमेव नान्ये कृष्णे निवेशितधियो वयमेव नान्ये॥

असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥

स्पर्धन्तां सह जन्मकुञ्जरतया दिक्कुञ्जरैः कुञ्जराः ग्राम्या वा वनवासिनो मदजलप्रक्लिन्नगण्डस्थलाः ।
आः कालस्य विपर्ययं शृणु सखे! प्राचीरपालीमलास्वादस्निग्धकपोलभित्तिरधमः कोलोऽपि संस्पर्धते ॥

बाह्यैर्वर्णाडम्बरैर्मा भ्रमन्तु छित्त्वा गर्भाभ्यन्तरं शोधयन्तु ।
निर्णेतारो नीरसत्वेन को वा डिण्डीराणां डिण्डिमानां च भेदः ॥

आनीयानीलशृङ्गद्युतिरचितजगद्रञ्जनादञ्जनाद्रेः चेञ्च्यामाराध्य कञ्चित्समयमथ निहत्योद्धनुष्कान् तुरुष्कान् ।
लक्ष्मीभूम्यामुभाभ्यां सह निजनिलये स्थापयन् रङ्गनाथं सम्यग्वर्यां सपर्यां पुनरकृत यशोदर्पणो गोप्पणार्यः ॥

॥ इति मुक्तकश्लोकाः समाप्ताः ॥

समाप्ता च
श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

काञ्चीवादिभयङ्करवंशीयाण्णङ्गरार्यदासेन । सैषा मालोपहृता शिरसि च कण्ठे च धार्यतां विबुधैः ॥



अनवधिशास्त्रसिन्धुविनिमग्नगभीरहृदाम्
अभिनवरङ्गनाथपरकालमहायमिनाम् ।
अनुपधिदिव्यभव्यकरुणापरिणामवशात्
अलभत मुद्रणेयमविलम्बसमाप्तिमहो ॥

॥ श्रीरस्तु ॥

# अवधेयं निवेदनम्



श्रीमद्वेदान्तदेशिकग्रन्थमालाया अस्याः प्रकाशने परिगणनीयं द्रव्योपकारं कृतवतां महानुभावानां नामावली सादरमधस्तात्प्रकाश्यते । एतेषां सर्वेषामपि छायाचित्राणि च प्रकाशनीयानीति संभृतोत्साहैरस्माभिः प्रयासतो यानि छायाचित्राणि संपादितानि, तत्सम्मुद्रणसनाथा काचिदनुबन्धपत्रिका अवतारिता वर्तते । सा चावश्यं प्रेक्षणीया भावुकैः । तत्र चावश्यं प्रकाशनीयानि छायाचित्राणि अलाभादेव विसृष्टानीति मन्तव्यम् । दयन्तां च ते स्वस्वच्छायाचित्राणि प्रेषयितुम् ।

यद्यपीदानीं वेदान्तदेशिकग्रन्थमाला अवसितमुद्रणा, तथाऽपि नैतावताऽस्माकं कृतकृत्यता भवति । क्रमशश्च भूयसोऽपूर्वग्रन्थान् सम्मुद्र्य तदातदा ग्रन्थमालापत्रिकाः प्रकाशयेम नियतम् । अस्ति हि भूयसी समुत्कण्ठाऽस्माकं ग्रन्थमालाकार्यालयश्चिरं विलसतादिति । आस्तिका महान्त उदाराः पोषकपदवीः परिगृह्य मनोरथान्नः फलेग्रहीन् करिष्यन्त्येवेति द्रढीयान् विस्रम्भः । श्रीवैष्णवसंप्रदायानुबन्धिनो मुद्रणीयानपूर्वान् ग्रन्थानुपहरन्तु च ते ते महान्त इति सारयामः ।

## अद्यावधि कृतोपकाराणां महाशयानां नामानुक्रमणिका ।

(अकारादिक्रमेण नामानि प्रकाश्यन्ते ।)

श्रीमन्त :—

अभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकेन्द्राः H. H. Rajaguru Parakalaswami Mysore

अहोबिलमठाधीश श्रीस्वामिपादाः श्रीरङ्गम् H. H. Sri Ahobila Mutt Swami, Srirangam.

आण्डवन् स्वामिपादाः श्रीरङ्गम् H. H. Andavan Swami, Srirangam.

आरावमुदय्यङ्गार Dewan Bahadur S. Aravamudu Iyengar, Advocate, Hyderabad.

उत्तरादिमठाधीश सत्यध्यानतीर्थस्वामिचरणाः H. H. Uttaradi Mutt Swami

उभयवेदान्तप्रवर्तनसभा Ubhayavedanta Pravartana Sabha, Malleswaram.

**किशोरीरमणप्रसाद्** Baboo Kisoriramana Prasad Radharamana Prasad, Benares.

**कृष्णमाचार्याः** [illegible] कुम्भघोणम् R. V. Krishnamacharya Kumbakonam.

**कृष्णमाचार्याः** (वि. टि.) V. T. Krishnamacharya, Dewan Saheb, Baroda State.

**कृष्णमाचार्याः** M. Krishnamacharyar Retd. Dt. Judge, Tirupati.

**गणेशराम मुरलीधरजी,** श्रीरामानुज बिल्डिंग, सोलापुर Ganeshram Muralidhar, Sholapur

**गदाधर रामानुजस्वामी,** महन्त, एमारमठ, श्रीजगदीशपुरी Sri Mahantji Emarmutt Puri

**गरुडध्वजाचार्यः,** महन्त, रामानुजकोट, रामघाट, उज्जयिनी Mahant Garudadhwajacharya, Ujjain

**गोपालाचार्यमहाशयाः,** A. V. Gopalacharyar, M.A., B.L., Advocate, Trichinopoly.

**गोविन्दनारायणतिवारी,** प्रयाग नारायणमन्दिराध्यक्ष, कान्पुर Sri Govindanarayanthiwari Cawnpore

**गोविन्दाचार्यशास्त्री, व्याकरणाचार्य,** सांख्यवेदान्ततीर्थ, श्रीरामानुज वेदान्तविद्यालयाध्यक्ष, बृन्दावन

**चक्रपाणिस्वामी** वेदान्ताचार्यः गुरुकुलरोड बृन्दावन

**जगन्नाथप्रसादशुक्ल** आयुर्वेदपञ्चानन, भिषङ्मणि प्रयाग

**जमनादास राजपुत** Jamnadas Rajaput, Bombay.

**ताराचन्द रामनाथ हनमन्तरामजी** सेठजी पुना

**तिरुमलाचार्यस्वामी** (कोयिल् कन्दाडै श्री[illegible] कीटगञ्ज, प्रयाग)

**दामोदरशास्त्री** (श्रीमन्माध्वसंप्रदायाचार्य दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य न्यायरत्नतर्करत्न) काशी

**दामोदरस्वामी** महन्त रामानुजकोट, अहमदाबाद

**दामोदराचार्यस्वामी** आयुर्वेदमार्तण्ड, वैद्यराज, रामजीमन्दिर, अहमदाबाद

**दीक्षिताचार्यः** (विद्वद्वरिष्ठ-श्रीवल्लभाचार्यदर्शनधुरन्धर गोस्वामि दीक्षिताचार्यः) बडामंदिर बम्बई

**देवनायकाचार्यः** व्याकरणाचार्यः महाविद्वान् काशी

**नरसिंहाचार्याः** विद्वद्वरेण्याः, विष्णुपाद विद्यापीठ, गया

**नारायणय्यङ्गार** S. Narayanayyangar Deputy Supdt. of Police Srirangam

**पन्नाणदासजी श्रीरामभगतसोमाणीजी (पुत्ररत्न) नारायणदासजी** पुना

पन्नालालगोवर्धनलालजी (बंसीलाल मोतीलाल) हैदराबाद

परांकुशाचार्याः पण्डितोत्तमाः, वेणीमाधवमन्दिर, प्रयागघाट, मथुरा

पूर्णचन्द्राचार्याः, व्याकरणवेदान्तविद्वद्वरा, काशी

बदरीप्रपन्नाचार्याः, पण्डितमणयः रीवा राजगुरुपदाभिषिक्ताः

बाबाराय महोदयः, (वैकुण्ठवासी) पाटन, गुजरात

भागवताचार्यापरनामधेय वेङ्कटाचार्य श्रीनारायणाचार्याः महाविद्वांसः अहमदाबाद

मगनीरामसेठजी महानुभाव, रमावैकुण्ठ, पुष्कर

मधुसूदनाचार्यमहोदयः, शान्तिभवनाध्यक्षः, अयोध्या

मोहनलालजी, सोलापुर, रामकृष्णसोमाणी, पुना

यशोदानन्दनाचार्यः, प्रबलवैद्यराजः, मौनिस्वामिपीठपतिः, वृन्दावनम्

रङ्गाचार्याः, मतत्रयनिरूपकाः विद्वद्वरिष्ठाः (काळी) पुदुकोटसंस्थान दानाधिकारिणः

रङ्गाचार्याः H. Rangacharyar, Dist , Troffice Supdt. Malleswaram Bangalore.

राघवाचार्यस्वामी S. Raghava Iyengar Retd. Dt. Judge, Srirangam

राघवाचार्यः शास्त्री विद्वद्वरेण्यः दर्शनमहाविद्यालयप्रतिष्ठापकः मुनिकी रेती हृषीकेश

राघवाचार्यः K. Raghavacharyar Retd. Assist. Presidency Post Master. Mambalam.

रामनिवासबांगड, विहरीलालबांगड, (किसनलाल बांगडका पुत्ररत्न कलकत्ता)

रामप्रपन्नाचार्यस्वामी, महाविद्वान् श्रीवलरामाचार्य स्थानाभिषिक्तः विजयराघवमन्दिराधीशः अयोध्या

रामसुखजीराठी (वैकुण्ठवासी) हीरालालजी के पिता, पुना

रामस्वामि अय्यङ्गार, T. S. Ramaswamy Iyengar, Advocate, Madura

रामचन्द्राचार्यः, मैनेजर श्रीबालमुकुन्दमहादेशिकपाठशाला अयोध्या

रामदयाळसोमानी कंपेनी, गदाधरजीसोमाणी बम्बई

रामाचार्याः, आलूरु (मैसूरुवास्तव्याः) विद्वांसः

रामानुजाचार्यस्वामी वेदान्तशिरोमणिः हरिदेवजीमंदिर वृन्दावन

**लक्ष्मीनिवासगनेडीवाला,** राजा सीतारांबाग हैदराबाद

**वरदाचार्याः** Sir S. Varadacharya Federal Court Judge, Delhi.

**वरदाचार्याः** (S. T. G.) M. A. चिट्टिगूडूरु संस्कृतकालेज प्रतिष्ठापकाः तदध्यक्षाश्च, पण्डितपरिवृढाः

**विजयसारथ्याचार्याः,** (अग्निहोत्र) प्रबलवैद्यमणयः, आयुर्वेदाचार्याः, मसूलिपट्टणम्

**वेङ्कटरङ्गअय्यङ्गार** S. Venkataranga Iyengar Mysore High Court Judge

**वेङ्कटरमणैयङ्गार,** C. V. Venkataramana Iyengar, Advocate, Dharmavilas, Coimbatore

**श्रीकान्तरायजी,** पाटन लक्ष्मीनारायणमन्दिराधीशः (गुजरात)

**श्रीनिवासरङ्गाचार्याः,** सुप्रसिद्धविद्वद्वरेण्य **कस्तूरिरङ्गाचार्यस्वामिपादात्मजाः** विद्वांसः मैसूरु

**श्रीनिवासाचार्याः,** R. Srinivasacharyar Chief Court Judge Pudukotah

**श्रीनिवासाचार्याः** P. M. Srinivasacharyar Dt., Judge, Masulipatam

**श्रीनिवासाचार्याः,** P. S. Srinivasacharyar Retd., Engineer P. W. D. Madras

**सुदर्शनाचार्याः,** M. Sudarsanam Iyengar & Sons, Timber Merchants, Madras

**सुन्दराचार्याः,** V. S. Sundaram Iyengar Accountant General Mylapore

**हरिनारायणस्वामी,** विद्वद्वरेण्यः लक्ष्मीनारायणमन्दिराध्यक्षः कान्पुर

**हजारीमलसोमाणी,** (मौलासर) कलकत्ता

## NOTE.

This list contains the names of gentlemen whose donations have been paid or promised before 30—11—1941. Those who join after that date shall have their names published in the comming issues.

We have been making arrangements necessary to continue this Granthamala series by publishing many more rare and useful works on Visishtadwaita Siddhanta. It is earnestly requested that all those thut are interested in the advance of culture do kindly help us to their utmost ability.

P. B. ANNANGARACHARYA,
Editor, Granthamala,
CONJEEVERAM.

GEETHACHARYA PRESS, WASHERMENPET, MADRAS.